# महाभारत - मौसल पर्व


मौसलपर्व १
अध्याय ००१ . . . . . . . . . . . . . . . . . . . . . . . . १
मुनिशापात्साम्बस्य मुसलप्रसवः . . . . . . . . . . . . . . . २
अध्याय ००२ . . . . . . . . . . . . . . . . . . . . . . . . २
उत्पातदर्शनम् . . . . . . . . . . . . . . . . . . . . . . ५
अध्याय ००३ . . . . . . . . . . . . . . . . . . . . . . . . ५
वृष्ण्यन्धकादिविनाशः . . . . . . . . . . . . . . . . . . . ७
अध्याय ००४ . . . . . . . . . . . . . . . . . . . . . . . . ७
रामकृष्णावतारसमाप्तिः . . . . . . . . . . . . . . . . . . १२
अध्याय ००५ . . . . . . . . . . . . . . . . . . . . . . . . १२
अर्जुनागमनम् . . . . . . . . . . . . . . . . . . . . . . १५
अध्याय ००६ . . . . . . . . . . . . . . . . . . . . . . . . १५
वसुदेवविलापः . . . . . . . . . . . . . . . . . . . . . . १७
अध्याय ००७ . . . . . . . . . . . . . . . . . . . . . . . . १७
वसुदेवनिधनम् . वज्राभिषेकः . . . . . . . . . . . . . . . . १९
अध्याय ००८ . . . . . . . . . . . . . . . . . . . . . . . . १९
व्यासार्जुनसमागमः . . . . . . . . . . . . . . . . . . . . २७
अध्याय ००९ . . . . . . . . . . . . . . . . . . . . . . . . २७

# ॥ महाभारत मौसलपर्व ॥

## मौसलपर्व

### अध्याय ००१

वैशंपायन उवाच ॥

षट्त्रिंशे त्वथ संप्राप्ते वर्षे कौरवनन्दनः ।
ददर्श विपरीतानि निमित्तानि युधिष्ठिरः ॥ ००१ ॥

ववुर्वाताः सनिर्घाता रूक्षाः शर्करवर्षिणः ।
अपसव्यानि शकुना मण्डलानि प्रचक्रिरे ॥ ००२ ॥

प्रत्यगूहुर्महानद्यो दिशो नीहारसंवृताः ।
उल्काश्चाङ्गारवर्षिण्यः प्रपेतुर्गगनाद्भुवि ॥ ००३ ॥

आदित्यो रजसा राजन्समवच्छन्नमण्डलः ।
विरश्मिरुदये नित्यं कबन्धैः समदृश्यत ॥ ००४ ॥

परिवेषाश्च दृश्यन्ते दारुणाः चन्द्रसूर्ययोः ।
त्रिवर्णाः श्यामरूक्षान्तास्तथा भस्मारुणप्रभाः ॥ ००५ ॥

एते चान्ये च बहव उत्पाता भयशंसिनः ।
दृश्यन्तेऽहरहो राजन्हृदयोद्वेगकारकाः ॥ ००६ ॥

कस्यचित्त्वथ कालस्य कुरुराजो युधिष्ठिरः ।
शुश्राव वृष्णिचक्रस्य मौसले कदनं कृतम् ॥ ००७ ॥

विमुक्तं वासुदेवं च श्रुत्वा रामं च पाण्डवः ।
समानीयाब्रवीद्भ्रातॄन्किं करिष्याम इत्युत ॥ ००८ ॥

परस्परं समासाद्य ब्रह्मदण्डबलात्कृतान् ।
वृष्णीन्विनष्टांस्ते श्रुत्वा व्यथिताः पाण्डवाभवन् ॥ ००९ ॥

निधनं वासुदेवस्य समुद्रस्येव शोषणम् ।
वीरा न श्रद्दधुस्तस्य विनाशं शार्ङ्गधन्वनः ॥ ०१० ॥

मौसलं ते परिश्रुत्य दुःखशोकसमन्विताः ।
विषण्णा हतसङ्कल्पाः पाण्डवाः समुपाविशन् ॥ ०११ ॥

---

# मुनिशापात्साम्बस्य मुसलप्रसवः

## अध्याय ००२

जनमेजय उवाच ॥

कथं विनष्टा भगवन्नन्धका वृष्णिभिः सह ।
पश्यतो वासुदेवस्य भोजाश्चैव महारथाः ॥ ००१ ॥

वैशंपायन उवाच ॥

षट्त्रिंशेऽथ ततो वर्षे वृष्णीनामनयो महान् ।
अन्योन्यं मुसलैस्ते तु निजघ्नुः कालचोदिताः ॥ ००२ ॥

जनमेजय उवाच ॥

केनानुशप्तास्ते वीराः क्षयं वृष्ण्यन्धका ययुः ।
भोजाश्च द्विजवर्य त्वं विस्तरेण वदस्व मे ॥ ००३ ॥

वैशंपायन उवाच ॥

विश्वामित्रं च कण्वं च नारदं च तपोधनम् ।
सारणप्रमुखा वीरा ददृशुर्द्वारकागतान् ॥ ००४ ॥

ते वै साम्बं पुरस्कृत्य भूषयित्वा स्त्रियं यथा ।
अब्रुवन्नुपसङ्गम्य दैवदण्डनिपीडिताः ॥ ००५ ॥

इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः ।
ऋषयः साधु जानीत किमियं जनयिष्यति ॥ ००६ ॥

इत्युक्तास्ते तदा राजन्विप्रलम्भप्रधर्षिताः ।
प्रत्यब्रुवंस्तान्मुनयो यत्तच्छृणु नराधिप ॥ ००७ ॥

वृष्ण्यन्धकविनाशाय मुसलं घोरमायसम् ।
वासुदेवस्य दायादः साम्बोऽयं जनयिष्यति ॥ ००८ ॥

येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः ।
उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्दनौ ॥ ००९ ॥

समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः ।

जरा कृष्णं महात्मानं शयानं भुवि भेत्स्यति ॥ ०१० ॥

इत्यब्रुवन्त ते राजन्प्रलब्धास्तैर्दुरात्मभिः ।
मुनयः क्रोधरक्ताक्षाः समीक्ष्याथ परस्परम् ॥ ०११ ॥

तथोक्त्वा मुनयस्ते तु ततः केशवमभ्ययुः ।
अथाब्रवीत्तदा वृष्णीञ्श्रुत्वैवं मधुसूदनः ।
अन्तज्ञो मतिमांस्तस्य भवितव्यं तथेति तान् ॥ ०१३ ॥

एवमुक्त्वा हृषीकेशः प्रविवेश पुनर्गृहान् ।
कृतान्तमन्यथा नैच्छत्कर्तुं स जगतः प्रभुः ॥ ०१४ ॥

श्वोभूतेऽथ ततः साम्बो मुसलं तदसूत वै ।
वृष्ण्यन्धकविनाशाय किङ्करप्रतिमं महत् ॥ ०१५ ॥

प्रसूतं शापजं घोरं तच्च राज्ञे न्यवेदयन् ।
विषण्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत् ॥ ०१६ ॥

प्राक्षिपन्सागरे तच्च पुरुषा राजशासनात् ।
अघोषयंश्च नगरे वचनादाहुकस्य च ॥ ०१७ ॥

अद्य प्रभृति सर्वेषु वृष्ण्यन्धकगृहेष्विह ।
सुरासवो न कर्तव्यः सर्वैर्नगरवासिभिः ॥ ०१८ ॥

यश्च नोऽविदितं कुर्यात्पेयं कश्चिन्नरः क्वचित् ।
जीवन्स शूलमारोहेत्स्वयं कृत्वा सबान्धवः ॥ ०१९ ॥

ततो राजभयात्सर्वे नियमं चक्रिरे तदा ।
नराः शासनमाज्ञाय तस्य राज्ञो महात्मनः ॥ ०२० ॥

# उत्पातदर्शनम्

## अध्याय ००३

वैशंपायन उवाच ॥

एवं प्रयतमानानां वृष्णीनामन्धकैः सह ।
कालो गृहाणि सर्वेषां परिचक्राम नित्यशः ॥ ००१ ॥

करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ।
गृहाण्यवेक्ष्य वृष्णीनां नादृश्यत पुनः क्वचित् ॥ ००२ ॥

उत्पेदिरे महावाता दारुणाश्चा दिने दिने ।
वृष्ण्यन्धकविनाशाय बहवो रोमहर्षणाः ॥ ००३ ॥

विवृद्धमूषका रथ्या विभिन्नमणिकास्तथा ।
चीचीकूचीति वाश्यन्त्यः सारिका वृष्णिवेश्मसु ॥ ००४ ॥

नोपशाम्यति शब्दश्च स दिवारात्रमेव हि ॥ ००४ ॥

अनुकुर्वन्नुलूकानां सारसा विरुतं तथा ।
अजाः शिवानां च रुतमन्वकुर्वत भारत ॥ ००५ ॥

पाण्डुरा रक्तपादाश्च विहगाः कालचोदिताः ।
वृष्ण्यन्धकानां गेहेषु कपोता व्यचरंस्तदा ॥ ००६ ॥

व्यजायन्त खरा गोषु करभाश्वतरीषु च ।
शुनीष्वपि बिडालाश्च मूषका नकुलीषु च ॥ ००७ ॥

नापत्रपन्त पापानि कुर्वन्तो वृष्णयस्तदा ।
प्राद्विषन्ब्राह्मणांश्चापि पितॄन्देवांस्तथैव च  ॥ ००८  ॥

गुरूंश्चाप्यवमन्यन्त न तु रामजनार्दनौ ।
पत्न्यः पतीन्व्युच्चरन्त पत्नीश्च पतयस्तथा  ॥ ००९  ॥

विभावसुः प्रज्वलितो वामं विपरिवर्तते ।
नीललोहितमाञ्जिष्ठा विसृजन्नर्चिषः पृथक्  ॥ ०१०  ॥

उदयास्तमने नित्यं पुर्यां तस्यां दिवाकरः ।
व्यदृश्यतासकृत्पुंभिः कबन्धैः परिवारितः  ॥ ०११  ॥

महानसेषु सिद्धेऽन्ने संस्कृतेऽतीव भारत ।
आहार्यमाणे कृमयो व्यदृश्यन्त नराधिप  ॥ ०१२  ॥

पुण्याहे वाच्यमाने च जपत्सु च महात्मसु ।
अभिधावन्तः श्रूयन्ते न चादृश्यत कश्चन  ॥ ०१३  ॥

परस्परं च नक्षत्रं हन्यमानं पुनः पुनः ।
ग्रहैरपश्यन्सर्वे ते नात्मनस्तु कथञ्चन  ॥ ०१४  ॥

नदन्तं पाञ्चजन्यं च वृष्ण्यन्धकनिवेशने ।
समन्तात्प्रत्यवाश्यन्त रासभा दारुणस्वराः  ॥ ०१५  ॥

एवं पश्यन्हृषीकेशः संप्राप्तं कालपर्ययम् ।
त्रयोदश्याममावास्यां तां दृष्ट्वा प्राब्रवीदिदम्  ॥ ०१६  ॥

चतुर्दशी पञ्चदशी कृतेयं राहुणा पुनः ।
तदा च भारते युद्धे प्राप्ता चाद्य क्षयाय नः  ॥ ०१७  ॥

विमृशन्नेव कालं तं परिचिन्त्य जनार्दनः ।
मेने प्राप्तं स षड्विंशं वर्षं वै केशिसूदनः ॥ ०१८ ॥

पुत्रशोकाभिसंतप्ता गान्धारी हतबान्धवा ।
यदनुव्याजहारार्ता तदिदं समुपागतम् ॥ ०१९ ॥

इदं च तदनुप्राप्तमब्रवीद्यद्युधिष्ठिरः ।
पुरा व्यूढेष्वनीकेषु दृष्ट्वोत्पातान्सुदारुणान् ॥ ०२० ॥

इत्युक्त्वा वासुदेवस्तु चिकीर्षन्सत्यमेव तत् ।
आज्ञापयामास तदा तीर्थयात्रामरिंदम ॥ ०२१ ॥

अघोषयन्त पुरुषास्तत्र केशवशासनात् ।
तीर्थयात्रा समुद्रे वः कार्येति पुरुषर्षभाः ॥ ०२२ ॥

---

# वृष्ण्यन्धकादिविनाशः

## अध्याय ००४

वैशंपायन उवाच ॥

काली स्त्री पाण्डुरैर्दन्तैः प्रविश्य हसती निशि ।
स्त्रियः स्वप्नेषु मुष्णन्ती द्वारकां परिधावति ॥ ००१ ॥

अलङ्काराश्च छत्रं च ध्वजाश्च कवचानि च ।
ह्रियमाणान्यदृश्यन्त रक्षोभिः सुभयानकैः ॥ ००२ ॥

तच्चाग्निदत्तं कृष्णस्य वज्रनाभमयस्मयम् ।
दिवमाचक्रमे चक्रं वृष्णीनां पश्यतां तदा ॥ ००३ ॥

युक्तं रथं दिव्यमादित्यवर्णं ; हयाहरन्पश्यतो दारुकस्य ।
ते सागरस्योपरिष्ठादवर्त ;न्मनोजवाश्चतुरो वाजिमुख्याः ॥ ००४ ॥

तालः सुपर्णश्च महाध्वजौ तौ ; सुपूजितौ रामजनार्दनाभ्याम् ।
उच्चैर्जह्रुरप्सरसो दिवानिशं ; वाचश्चोचुर्गम्यतां तीर्थयात्रा ॥ ००५ ॥

ततो जिगमिषन्तस्ते वृष्ण्यन्धकमहारथाः ।
सान्तःपुरास्तदा तीर्थयात्रामैच्छन्नरर्षभाः ॥ ००६ ॥

ततो भोज्यं च भक्ष्यं च पेयं चान्धकवृष्णयः ।
बहु नानाविधं चक्रुर्मद्यं मांसमनेकशः ॥ ००७ ॥

ततः सीधुषु सक्ताश्च निर्ययुर्नगराद्बहिः ।
यानैरश्वैर्गजैश्चैव श्रीमन्तस्तिग्मतेजसः ॥ ००८ ॥

ततः प्रभासे न्यवसन्यथोद्देशं यथागृहम् ।
प्रभूतभक्ष्यपेयास्ते सदारा यादवास्तदा ॥ ००९ ॥

निविष्टांस्तान्निशम्याथ समुद्रान्ते स योगवित् ।
जगामामन्त्र्य तान्वीरानुद्धवोऽर्थविशारदः ॥ ०१० ॥

तं प्रस्थितं महात्मानमभिवाद्य कृताञ्जलिम् ।
जानन्विनाशं वृष्णीनां नैच्छद्वारयितुं हरिः ॥ ०११ ॥

ततः कालपरीतास्ते वृष्ण्यन्धकमहारथाः ।
अपश्यन्नुद्धवं यान्तं तेजसावृत्य रोदसी ॥ ०१२ ॥

ब्राह्मणार्थेषु यत्सिद्धमन्नं तेषां महात्मनाम् ।

तद्वानरेभ्यः प्रददुः सुरागन्धसमन्वितम् ॥ ०१३ ॥

ततस्तूर्यशताकीर्णं नटनर्तकसङ्कुलम् ।
प्रावर्तत महापानं प्रभासे तिग्मतेजसाम् ॥ ०१४ ॥

कृष्णस्य संनिधौ रामः सहितः कृतवर्मणा ।
अपिबद्युयुधानश्च गदो बभ्रुस्तथैव च ॥ ०१५ ॥

ततः परिषदो मध्ये युयुधानो मदोत्कटः ।
अब्रवीत्कृतवर्माणमवहस्यावमन्य च ॥ ०१६ ॥

कः क्षत्रियो मन्यमानः सुप्तान्हन्यान्मृतानिव ।
न तन्मृष्यन्ति हार्दिक्य यादवा यत्त्वया कृतम् ॥ ०१७ ॥

इत्युक्ते युयुधानेन पूजयामास तद्वचः ।
प्रद्युम्नो रथिनां श्रेष्ठो हार्दिक्यमवमन्य च ॥ ०१८ ॥

ततः परमसङ्क्रुद्धः कृतवर्मा तमब्रवीत् ।
निर्दिशन्निव सावज्ञं तदा सव्येन पाणिना ॥ ०१९ ॥

भूरिश्रवाश्छिन्नबाहुर्युद्धे प्रायगतस्त्वया ।
वधेन सुनृशंसेन कथं वीरेण पातितः ॥ ०२० ॥

इति तस्य वचः श्रुत्वा केशवः परवीरहा ।
तिर्यक्सरोषया दृष्ट्या वीक्षां चक्रे स मन्युमान् ॥ ०२१ ॥

मणिः स्यमन्तकश्चैव यः स सत्राजितोऽभवत् ।
तां कथां स्मारयामास सात्यकिर्मधुसूदनम् ॥ ०२२ ॥

तच्छ्रुत्वा केशवस्याङ्कमगमद्रुदती तदा ।

सत्यभामा प्रकुपिता कोपयन्ती जनार्दनम् ॥ ०२३ ॥

तत उत्थाय सक्रोधः सात्यकिर्वाक्यमब्रवीत् ।
पञ्चानां द्रौपदेयानां धृष्टद्युम्नशिखण्डिनोः ॥ ०२४ ॥

एष गच्छामि पदवीं सत्येन च तथा शपे ।
सौप्तिके ये च निहताः सुप्तानेन दुरात्मना ॥ ०२५ ॥

द्रोणपुत्रसहायेन पापेन कृतवर्मणा ।
समाप्तमायुरस्याद्य यशश्चापि सुमध्यमे ॥ ०२६ ॥

इतीदमुक्त्वा खड्गेन केशवस्य समीपतः ।
अभिद्रुत्य शिरः क्रुद्धश्चिच्छेद कृतवर्मणः ॥ ०२७ ॥

तथान्यानपि निघ्नन्तं युयुधानं समन्ततः ।
अभ्यधावद्धृषीकेशो विनिवारयिषुस्तदा ॥ ०२८ ॥

एकीभूतास्ततः सर्वे कालपर्यायचोदिताः ।
भोजान्धका महाराज शैनेयं पर्यवारयन् ॥ ०२९ ॥

तान्दृष्ट्वा पततस्तूर्णमभिक्रुद्धाञ्जनार्दनः ।
न चुक्रोध महातेजा जानन्कालस्य पर्ययम् ॥ ०३० ॥

ते तु पानमदाविष्टाश्चोदिताश्चैव मन्युना ।
युयुधानमथाभ्यघ्नन्नुच्छिष्टैर्भाजनैस्तदा ॥ ०३१ ॥

हन्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः ।
तदन्तरमुपाधावन्मोक्षयिष्यञ्शिनेः सुतम् ॥ ०३२ ॥

स भोजैः सह संयुक्तः सात्यकिश्चान्धकैः सह ।
बहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः ॥ ०३३ ॥

हतं दृष्ट्वा तु शैनेयं पुत्रं च यदुनन्दनः ।
एरकाणां तदा मुष्टिं कोपाज्जग्राह केशवः ॥ ०३४ ॥

तदभून्मुसलं घोरं वज्रकल्पमयोमयम् ।
जघान तेन कृष्णस्तान्येऽस्य प्रमुखतोऽभवन् ॥ ०३५ ॥

ततोऽन्धकाश्च भोजाश्च शैनेया वृष्णयस्तथा ।
जघ्नुरन्योन्यमाक्रन्दे मुसलैः कालचोदिताः ॥ ०३६ ॥

यस्तेषामेरकां कश्चिज्जग्राह रुषितो नृप ।
वज्रभूतेव सा राजन्नदृश्यत तदा विभो ॥ ०३७ ॥

तृणं च मुसलीभूतमपि तत्र व्यदृश्यत ।
ब्रह्मदण्डकृतं सर्वमिति तद्विद्धि पार्थिव ॥ ०३८ ॥

आविध्याविध्य ते राजन्प्रक्षिपन्ति स्म यत्तृणम् ।
तद्वज्रभूतं मुसलं व्यदृश्यत तदा दृढम् ॥ ०३९ ॥

अवधीत्पितरं पुत्रः पिता पुत्रं च भारत ।
मत्ताः परिपतन्ति स्म पोथयन्तः परस्परम् ॥ ०४० ॥

पतङ्गा इव चाग्नौ ते न्यपतन्कुकुरान्धकाः ।
नासीत्पलायने बुद्धिर्वध्यमानस्य कस्यचित् ॥ ०४१ ॥

तं तु पश्यन्महाबाहुर्जानन्कालस्य पर्ययम् ।
मुसलं समवष्टभ्य तस्थौ स मधुसूदनः ॥ ०४२ ॥

साम्बं च निहतं दृष्ट्वा चारुदेष्णं च माधवः ।
प्रद्युम्नं चानिरुद्धं च ततश्चुक्रोध भारत ॥ ०४३ ॥

गदं वीक्ष्य शयानं च भृशं कोपसमन्वितः ।
स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः ॥ ०४४ ॥

तं निघ्नन्तं महातेजा बभ्रुः परपुरञ्जयः ।
दारुकश्चैव दाशार्हमूचतुर्यन्निबोध तत् ॥ ०४५ ॥

भगवन्संहृतं सर्वं त्वया भूयिष्ठमच्युत ।
रामस्य पदमन्विच्छ तत्र गच्छाम यत्र सः ॥ ०४६ ॥

---

# रामकृष्णावतारसमाप्तिः

## अध्याय ००५

वैशंपायन उवाच ॥

ततो ययुर्दारुकः केशवश्च ; बभ्रुश्च रामस्य पदं पतन्तः ।
अथापश्यन्राममनन्तवीर्यं ; वृक्षे स्थितं चिन्तयानं विविक्ते ॥ ००१ ॥

ततः समासाद्य महानुभावः ; कृष्णस्तदा दारुकमन्वशासत् ।
गत्वा कुरूञ्शीघ्रमिमं महान्तं ; पार्थाय शंसस्व वधं यदूनाम् ॥ ००२ ॥

ततोऽर्जुनः क्षिप्रमिहोपयातु ; श्रुत्वा मृतान्यादवान्ब्रह्मशापात् ।
इत्येवमुक्तः स ययौ रथेन ; कुरूंस्तदा दारुको नष्टचेताः ॥ ००३ ॥

ततो गते दारुके केशवोऽथ ; दृष्ट्वान्तिके बभ्रुमुवाच वाक्यम् ।
स्त्रियो भवान्रक्षतु यातु शीघ्रं ; नैता हिंस्युर्दस्यवो वित्तलोभात् ॥ ००४ ॥

स प्रस्थितः केशवेनानुशिष्टो ; मदातुरो ज्ञातिवधार्दितश्च ।
तं वै यान्तं संनिधौ केशवस्य ; त्वरन्तमेकं सहसैव बभ्रुम्  ॥ ००५  ॥

ब्रह्मानुशप्तमवधीन्महद्वै ; कूटोन्मुक्तं मुसलं लुब्धकस्य  ॥ ००५  ॥

ततो दृष्ट्वा निहतं बभ्रुमाह ; कृष्णो वाक्यं भ्रातरमग्रजं तु ।
इहैव त्वं मां प्रतीक्षस्व राम ; यावत्स्त्रियो ज्ञातिवशाः करोमि  ॥ ००६  ॥

ततः पुरीं द्वारवतीं प्रविश्य ; जनार्दनः पितरं प्राह वाक्यम् ।
स्त्रियो भवान्रक्षतु नः समग्रा ; धनञ्जयस्यागमनं प्रतीक्षन्  ॥ ००७  ॥

रामो वनान्ते प्रतिपालयन्मा ;मास्तेऽद्याहं तेन समागमिष्ये  ॥ ००७  ॥

दृष्टं मयेदं निधनं यदूनां ; राज्ञां च पूर्वं कुरुपुङ्गवानाम् ।
नाहं विना यदुभिर्यादवानां ; पुरीमिमां द्रष्टुमिहाद्य शक्तः  ॥ ००८  ॥

तपश्चरिष्यामि निबोध तन्मे ; रामेण सार्धं वनमभ्युपेत्य ।
इतीदमुक्त्वा शिरसास्य पादौ ; संस्पृश्य कृष्णस्त्वरितो जगाम  ॥ ००९  ॥

ततो महान्निनदः प्रादुरासी ;त्सस्त्रीकुमारस्य पुरस्य तस्य ।
अथाब्रवीत्केशवः संनिवर्त्य ; शब्दं श्रुत्वा योषितां क्रोशतीनाम्  ॥ ०१०  ॥

पुरीमिमामेष्यति सव्यसाची ; स वो दुःखान्मोचयिता नराग्र्यः ।
ततो गत्वा केशवस्तं ददर्श ; रामं वने स्थितमेकं विविक्ते  ॥ ०११  ॥

अथापश्यद्योगयुक्तस्य तस्य ; नागं मुखान्निःसरन्तं महान्तम् ।
श्वेतं ययौ स ततः प्रेक्ष्यमाणो ; महार्णवो येन महानुभावः  ॥ ०१२  ॥

सहस्रशीर्षः पर्वताभोगवर्ष्मा ; रक्ताननः स्वां तनुं तां विमुच्य ।
सम्यक्च तं सागरः प्रत्यगृह्णा ;न्नागा दिव्याः सरितश्चैव पुण्याः  ॥ ०१३  ॥

कर्कोटको वासुकिस्तक्षकश्च ; पृथुश्रवा वरुणः कुञ्जरश्च ।
मिश्री शङ्खः कुमुदः पुण्डरीक ;स्तथा नागो धृतराष्ट्रो महात्मा ॥ ०१४ ॥

ह्रादः क्राथः शितिकण्ठोऽग्रतेजा ;स्तथा नागौ चक्रमन्दातिषण्डौ ।
नागश्रेष्ठो दुर्मुखश्चाम्बरीषः ; स्वयं राजा वरुणश्चापि राजन् ॥ ०१५ ॥

प्रत्युद्गम्य स्वागतेनाभ्यनन्दं ;स्तेऽपूजयंश्चार्घ्यपाद्यक्रियाभिः ॥ ०१५ ॥

ततो गते भ्रातरि वासुदेवो ; जानन्सर्वा गतयो दिव्यदृष्टिः ।
वने शून्ये विचरंश्चिन्तयानो ; भूमौ ततः संविवेशाग्र्यतेजाः ॥ ०१६ ॥

सर्वं हि तेन प्राक्तदा वित्तमासी ;द्गान्धार्या यद्वाक्यमुक्तः स पूर्वम् ।
दुर्वाससा पायसोच्छिष्टलिप्ते ; यच्चाप्युक्तं तच्च सस्मार कृष्णः ॥ ०१७ ॥

स चिन्तयानोऽन्धकवृष्णिनाशं ; कुरुक्षयं चैव महानुभावः ।
मेने ततः सङ्क्रमणस्य कालं ; ततश्चकारेन्द्रियसंनिरोधम् ॥ ०१८ ॥

स संनिरुद्धेन्द्रियवाङ्मनास्तु ; शिश्ये महायोगमुपेत्य कृष्णः ।
जराथ तं देशमुपाजगाम ; लुब्धस्तदानीं मृगलिप्सुरुग्रः ॥ ०१९ ॥

स केशवं योगयुक्तं शयानं ; मृगाशङ्की लुब्धकः सायकेन ।
जराविध्यत्पादतले त्वरावां ;स्तं चाभितस्तज्जिघृक्षुर्जगाम ॥ ०२० ॥

अथापश्यत्पुरुषं योगयुक्तं ; पीताम्बरं लुब्धकोऽनेकबाहुम् ॥ ०२० ॥

मत्वात्मानमपराद्धं स तस्य ; जग्राह पादौ शिरसा चार्तरूपः ।
आश्वासयत्तं महात्मा तदानीं ; गच्छन्नूर्ध्वं रोदसी व्याप्य लक्ष्म्या ॥ ०२१ ॥

दिवं प्राप्तं वासवोऽथाश्विनौ च ; रुद्रादित्या वसवश्चाथ विश्वे ।
प्रत्युद्ययुर्मुनयश्चापि सिद्धा ; गन्धर्वमुख्याश्च सहाप्सरोभिः ॥ ०२२ ॥

ततो राजन्भगवानुग्रतेजा ; नारायणः प्रभवश्चाव्ययश्च ।
योगाचार्यो रोदसी व्याप्य लक्ष्म्या ; स्थानं प्राप स्वं महात्माप्रमेयम्  ॥ ०२३  ॥

ततो देवैर्ऋषिभिश्चापि कृष्णः ; समागतश्चारणैश्चैव राजन् ।
गन्धर्वाग्र्यैरप्सरोभिर्वराभिः ; सिद्धैः साध्यैश्चानतैः पूज्यमानः  ॥ ०२४  ॥

ते वै देवाः प्रत्यनन्दन्त राज ;न्मुनिश्रेष्ठा वाग्भिरानर्चुरीशम् ।
गन्धर्वाश्चाप्युपतस्थुः स्तुवन्तः ; प्रीत्या चैनं पुरुहूतोऽभ्यनन्दत्  ॥ ०२५  ॥

---

# अर्जुनागमनम्

## अध्याय ००६

वैशंपायन उवाच  ॥

दारुकोऽपि कुरून्गत्वा दृष्ट्वा पार्थान्महारथान् ।
आचष्ट मौसले वृष्णीनन्योन्येनोपसंहृतान्  ॥ ००१  ॥

श्रुत्वा विनष्टान्वार्ष्णेयान्सभोजकुकुरान्धकान् ।
पाण्डवाः शोकसंतप्ता वित्रस्तमनसोऽभवन्  ॥ ००२  ॥

ततोऽर्जुनस्तानामन्त्र्य केशवस्य प्रियः सखा ।
प्रययौ मातुलं द्रष्टुं नेदमस्तीति चाब्रवीत्  ॥ ००३  ॥

स वृष्णिनिलयं गत्वा दारुकेण सह प्रभो ।
ददर्श द्वारकां वीरो मृतनाथामिव स्त्रियम्  ॥ ००४  ॥

याः स्म ता लोकनाथेन नाथवत्यः पुराभवन् ।
तास्त्वनाथास्तदा नाथं पार्थं दृष्ट्वा विचुक्रुशुः ॥ ००५ ॥

षोडशस्त्रीसहस्राणि वासुदेवपरिग्रहः ।
तासामासीन्महान्नादो दृष्ट्वैवार्जुनमागतम् ॥ ००६ ॥

तास्तु दृष्ट्वैव कौरव्यो बाष्पेण पिहितोऽर्जुनः ।
हीनाः कृष्णेन पुत्रैश्च नाशकत्सोऽभिवीक्षितुम् ॥ ००७ ॥

तां स वृष्ण्यन्धकजलां हयमीनां रथोडुपाम् ।
वादित्ररथघोषौघां वेश्मतीर्थमहाग्रहाम् ॥ ००८ ॥

रत्नशैवलसंघाटां वज्रप्राकारमालिनीम् ।
रथ्यास्रोतोजलावर्तां चत्वरस्तिमितह्रदाम् ॥ ००९ ॥

रामकृष्णमहाग्राहां द्वारकासरितं तदा ।
कालपाशग्रहां घोरां नदीं वैतरणीमिव ॥ ०१० ॥

तां ददर्शार्जुनो धीमान्विहीनां वृष्णिपुङ्गवैः ।
गतश्रियं निरानन्दां पद्मिनीं शिशिरे यथा ॥ ०११ ॥

तां दृष्ट्वा द्वारकां पार्थस्ताश्च कृष्णस्य योषितः ।
सस्वनं बाष्पमुत्सृज्य निपपात महीतले ॥ ०१२ ॥

सात्राजिती ततः सत्या रुक्मिणी च विशां पते ।
अभिपत्य प्ररुरुदुः परिवार्य धनञ्जयम् ॥ ०१३ ॥

ततस्ताः काञ्चने पीठे समुत्थायोपवेश्य च ।
अब्रुवन्त्यो महात्मानं परिवार्योपतस्थिरे ॥ ०१४ ॥

ततः संस्तूय गोविन्दं कथयित्वा च पाण्डवः ।

आश्वास्य ताः स्त्रियश्चापि मातुलं द्रष्टुमभ्यगात् ॥ ०१५ ॥

---

# वसुदेवविलापः

## अध्याय ००७

वैशंपायन उवाच ॥

तं शयानं महात्मानं वीरमानकदुन्दुभिम् ।
पुत्रशोकाभिसंतप्तं ददर्श कुरुपुङ्गवः ॥ ००१ ॥

तस्याश्रुपरिपूर्णाक्षो व्यूढोरस्को महाभुजः ।
आर्तस्यार्ततरः पार्थः पादौ जग्राह भारत ॥ ००२ ॥

समालिङ्ग्यार्जुनं वृद्धः स भुजाभ्यां महाभुजः ।
रुदन्पुत्रान्स्मरन्सर्वान्विललाप सुविह्वलः ॥ ००३ ॥

भ्रातॄन्पुत्रांश्च पौत्रांश्च दौहित्रांश्च सखीनपि ॥ ००३ ॥

वसुदेव उवाच ॥

यैर्जिता भूमिपालाश्च दैत्याश्च शतशोऽर्जुन ।
तान्दृष्ट्वा नेह पश्यामि जीवाम्यर्जुन दुर्मरः ॥ ००४ ॥

यौ तावर्जुन शिष्यौ ते प्रियौ बहुमतौ सदा ।
तयोरपनयात्पार्थ वृष्णयो निधनं गताः ॥ ००५ ॥

यौ तौ वृष्णिप्रवीराणां द्वावेवातिरथौ मतौ ।
प्रद्युम्नो युयुधानश्च कथयन्कत्थसे च यौ ॥ ००६ ॥

नित्यं त्वं कुरुशार्दूल कृष्णश्च मम पुत्रकः ।
तावुभौ वृष्णिनाशस्य मुखमास्तां धनञ्जय ॥ ००७ ॥

न तु गर्हामि शैनेयं हार्दिक्यं चाहमर्जुन ।
अक्रूरं रौक्मिणेयं च शापो ह्येवात्र कारणम् ॥ ००८ ॥

केशिनं यस्तु कंसं च विक्रम्य जगतः प्रभुः ।
विदेहावकरोत्पार्थ चैद्यं च बलगर्वितम् ॥ ००९ ॥

नैषादिमेकलव्यं च चक्रे कालिङ्गमागधान् ।
गान्धारान्काशिराजं च मरुभूमौ च पार्थिवान् ॥ ०१० ॥

प्राच्यांश्च दाक्षिणात्यांश्च पार्वतीयांस्तथा नृपान् ।
सोऽभ्युपेक्षितवानेतमनयं मधुसूदनः ॥ ०११ ॥

ततः पुत्रांश्च पौत्रांश्च भ्रातॄनथ सखीनपि ।
शयानान्निहतान्दृष्ट्वा ततो मामब्रवीदिदम् ॥ ०१२ ॥

संप्राप्तोऽद्यायमस्यान्तः कुलस्य पुरुषर्षभ ।
आगमिष्यति बीभत्सुरिमां द्वारवतीं पुरीम् ॥ ०१३ ॥

आख्येयं तस्य यद्वृत्तं वृष्णीनां वैशसं महत् ।
स तु श्रुत्वा महातेजा यदूनामनयं प्रभो ॥ ०१४ ॥

आगन्ता क्षिप्रमेवेह न मेऽत्रास्ति विचारणा ॥ ०१४ ॥

योऽहं तमर्जुनं विद्धि योऽर्जुनः सोऽहमेव तु ।
यद्ब्रूयात्तत्तथा कार्यमिति बुध्यस्व माधव ॥ ०१५ ॥

स स्त्रीषु प्राप्तकालं वः पाण्डवो बालकेषु च ।
प्रतिपत्स्यति बीभत्सुर्भवतश्चौर्ध्वदेहिकम् ॥ ०१६ ॥

इमां च नगरीं सद्यः प्रतियाते धनञ्जये ।
प्राकाराट्टालकोपेतां समुद्रः प्लावयिष्यति ॥ ०१७ ॥

अहं हि देशे कस्मिंश्चित्पुण्ये नियममास्थितः ।
कालं कर्ता सद्य एव रामेण सह धीमता ॥ ०१८ ॥

एवमुक्त्वा हृषीकेशो मामचिन्त्यपराक्रमः ।
हित्वा मां बालकैः सार्धं दिशं कामप्यगात्प्रभुः ॥ ०१९ ॥

सोऽहं तौ च महात्मानौ चिन्तयन्भ्रातरौ तव ।
घोरं ज्ञातिवधं चैव न भुञ्जे शोककर्शितः ॥ ०२० ॥

न च भोक्ष्ये न जीविष्ये दिष्ट्या प्राप्तोऽसि पाण्डव ।
यदुक्तं पार्थ कृष्णेन तत्सर्वमखिलं कुरु ॥ ०२१ ॥

एतत्ते पार्थ राज्यं च स्त्रियो रत्नानि चैव ह ।
इष्टान्प्राणानहं हीमांस्त्यक्ष्यामि रिपुसूदन ॥ ०२२ ॥

---

# वसुदेवनिधनम् . वज्राभिषेकः

## अध्याय ००८

वैशंपायन उवाच ॥

एवमुक्तः स बीभत्सुर्मातुलेन परंतपः ।
दुर्मना दीनमनसं वसुदेवमुवाच ह ॥ ००१ ॥

नाहं वृष्णिप्रवीरेण मधुभिश्चैव मातुल ।
विहीनां पृथिवीं द्रष्टुं शक्तश्चिरमिह प्रभो ॥ ००२ ॥

राजा च भीमसेनश्च सहदेवश्च पाण्डवः ।
नकुलो याज्ञसेनी च षडेकमनसो वयम् ॥ ००३ ॥

राज्ञः सङ्क्रमणे चापि कालोऽयं वर्तते ध्रुवम् ।
तमिमं विद्धि संप्राप्तं कालं कालविदां वर ॥ ००४ ॥

सर्वथा वृष्णिदारांस्तु बालवृद्धांस्तथैव च ।
नयिष्ये परिगृह्याहमिन्द्रप्रस्थमरिंदम ॥ ००५ ॥

इत्युक्त्वा दारुकमिदं वाक्यमाह धनञ्जयः ।
अमात्यान्वृष्णिवीराणां द्रष्टुमिच्छामि माचिरम् ॥ ००६ ॥

इत्येवमुक्त्वा वचनं सुधर्मां यादवीं सभाम् ।
प्रविवेशार्जुनः शूरः शोचमानो महारथान् ॥ ००७ ॥

तमासनगतं तत्र सर्वाः प्रकृतयस्तथा ।
ब्राह्मणा नैगमाश्चैव परिवार्योपतस्थिरे ॥ ००८ ॥

तान्दीनमनसः सर्वान्निभृतान्गतचेतसः ।
उवाचेदं वचः पार्थः स्वयं दीनतरस्तदा ॥ ००९ ॥

शक्रप्रस्थमहं नेष्ये वृष्ण्यन्धकजनं स्वयम् ।
इदं तु नगरं सर्वं समुद्रः प्लावयिष्यति ॥ ०१० ॥

सज्जीकुरुत यानानि रत्नानि विविधानि च ।
वज्रोऽयं भवतां राजा शक्रप्रस्थे भविष्यति ॥ ०११ ॥

सप्तमे दिवसे चैव रवौ विमल उद्गते ।
बहिर्वत्स्यामहे सर्वे सज्जीभवत माचिरम् ॥ ०१२ ॥

इत्युक्तास्तेन ते पौराः पार्थेनाक्लिष्टकर्मणा ।
सज्जमाशु ततश्चक्रुः स्वसिद्ध्यर्थं समुत्सुकाः ॥ ०१३ ॥

तां रात्रिमवसत्पार्थः केशवस्य निवेशने ।
महता शोकमोहेन सहसाभिपरिप्लुतः ॥ ०१४ ॥

श्वोभूतेऽथ ततः शौरिर्वसुदेवः प्रतापवान् ।
युक्त्वात्मानं महातेजा जगाम गतिमुत्तमाम् ॥ ०१५ ॥

ततः शब्दो महानासीद्वसुदेवस्य वेश्मनि ।
दारुणः क्रोशतीनां च रुदतीनां च योषिताम् ॥ ०१६ ॥

प्रकीर्णमूर्धजाः सर्वा विमुक्ताभरणस्रजः ।
उरांसि पाणिभिर्घ्नन्त्यो व्यलपन्करुणं स्त्रियः ॥ ०१७ ॥

तं देवकी च भद्रा च रोहिणी मदिरा तथा ।
अन्वारोढुं व्यवसिता भर्तारं योषितां वराः ॥ ०१८ ॥

ततः शौरिं नृयुक्तेन बहुमाल्येन भारत ।
यानेन महता पार्थो बहिर्निष्क्रामयत्तदा ॥ ०१९ ॥

तमन्वयुस्तत्र तत्र दुःखशोकसमाहताः ।
द्वारकावासिनः पौराः सर्व एव नरर्षभ ॥ ०२० ॥

तस्याश्वमेधिकं छत्रं दीप्यमानाश्च पावकाः ।

पुरस्तात्तस्य यानस्य याजकाश्च ततो ययुः ॥ ०२१ ॥

अनुजग्मुश्च तं वीरं देव्यस्ता वै स्वलङ्कृताः ।
स्त्रीसहस्रैः परिवृता वधूभिश्च सहस्रशः ॥ ०२२ ॥

यस्तु देशः प्रियस्तस्य जीवतोऽभून्महात्मनः ।
तत्रैनमुपसङ्कल्प्य पितृमेधं प्रचक्रिरे ॥ ०२३ ॥

तं चिताग्निगतं वीरं शूरपुत्रं वराङ्गनाः ।
ततोऽन्वारुरुहुः पत्न्यश्चतस्रः पतिलोकगाः ॥ ०२४ ॥

तं वै चतसृभिः स्त्रीभिरन्वितं पाण्डुनन्दनः ।
अदाहयच्चन्दनैश्च गन्धैरुच्चावचैरपि ॥ ०२५ ॥

ततः प्रादुरभूच्छब्दः समिद्धस्य विभावसोः ।
सामगानां च निर्घोषो नराणां रुदतामपि ॥ ०२६ ॥

ततो वज्रप्रधानास्ते वृष्णिवीरकुमारकाः ।
सर्व एवोदकं चक्रुः स्त्रियश्चैव महात्मनः ॥ ०२७ ॥

अलुप्तधर्मस्तं धर्मं कारयित्वा स फल्गुनः ।
जगाम वृष्णयो यत्र विनष्टा भरतर्षभ ॥ ०२८ ॥

स तान्दृष्ट्वा निपतितान्कदने भृशदुःखितः ।
बभूवातीव कौरव्यः प्राप्तकालं चकार च ॥ ०२९ ॥

यथाप्रधानतश्चैव चक्रे सर्वाः क्रियास्तदा ।
ये हता ब्रह्मशापेन मुसलैरेरकोद्भवैः ॥ ०३० ॥

ततः शरीरे रामस्य वासुदेवस्य चोभयोः ।
अन्विष्य दाहयामास पुरुषैराप्तकारिभिः ॥ ०३१ ॥

स तेषां विधिवत्कृत्वा प्रेतकार्याणि पाण्डवः ।
सप्तमे दिवसे प्रायाद्रथमारुह्य सत्वरः ॥ ०३२ ॥

अश्वयुक्तै रथैश्चापि गोखरोष्ट्रयुतैरपि ॥ ०३२ ॥

स्त्रियस्ता वृष्णिवीराणां रुदत्यः शोककर्शिताः ।
अनुजग्मुर्महात्मानं पाण्डुपुत्रं धनञ्जयम् ॥ ०३३ ॥

भृत्यास्त्वन्धकवृष्णीनां सादिनो रथिनश्च ये ।
वीरहीनं वृद्धबालं पौरजानपदास्तथा ॥ ०३४ ॥

ययुस्ते परिवार्याथ कलत्रं पार्थशासनात् ॥ ०३४ ॥

कुञ्जरैश्च गजारोहा ययुः शैलनिभैस्तथा ।
सपादरक्षैः संयुक्ताः सोत्तरायुधिका ययुः ॥ ०३५ ॥

पुत्राश्चान्धकवृष्णीनां सर्वे पार्थमनुव्रताः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महाधनाः ॥ ०३६ ॥

दश षड्च सहस्राणि वासुदेवावरोधनम् ।
पुरस्कृत्य ययुर्वज्रं पौत्रं कृष्णस्य धीमतः ॥ ०३७ ॥

बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च ।
भोजवृष्ण्यन्धकस्त्रीणां हतनाथानि निर्ययुः ॥ ०३८ ॥

तत्सागरसमप्रख्यं वृष्णिचक्रं महर्द्धिमत् ।
उवाह रथिनां श्रेष्ठः पार्थः परपुरञ्जयः ॥ ०३९ ॥

निर्याते तु जने तस्मिन्सागरो मकरालयः ।
द्वारकां रत्नसंपूर्णां जलेनाप्लावयत्तदा ॥ ०४० ॥

तदद्भुतमभिप्रेक्ष्य द्वारकावासिनो जनाः ।
तूर्णात्तूर्णतरं जग्मुरहो दैवमिति ब्रुवन् ॥ ०४१ ॥

काननेषु च रम्येषु पर्वतेषु नदीषु च ।
निवसन्नानयामास वृष्णिदारान्धनञ्जयः ॥ ०४२ ॥

स पञ्चनदमासाद्य धीमानतिसमृद्धिमत् ।
देशे गोपशुधान्याढ्ये निवासमकरोत्प्रभुः ॥ ०४३ ॥

ततो लोभः समभवद्दस्यूनां निहतेश्वराः ।
दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन भारत ॥ ०४४ ॥

ततस्ते पापकर्माणो लोभोपहतचेतसः ।
आभीरा मन्त्रयामासुः समेत्याशुभदर्शनाः ॥ ०४५ ॥

अयमेकोऽर्जुनो योद्धा वृद्धबालं हतेश्वरम् ।
नयत्यस्मानतिक्रम्य योधाश्चेमे हतौजसः ॥ ०४६ ॥

ततो यष्टिप्रहरणा दस्यवस्ते सहस्रशः ।
अभ्यधावन्त वृष्णीनां तं जनं लोप्त्रहारिणः ॥ ०४७ ॥

महता सिंहनादेन द्रावयन्तः पृथग्जनम् ।
अभिपेतुर्धनार्थं ते कालपर्यायचोदिताः ॥ ०४८ ॥

ततो निवृत्तः कौन्तेयः सहसा सपदानुगः ।
उवाच तान्महाबाहुरर्जुनः प्रहसन्निव ॥ ०४९ ॥

निवर्तध्वमधर्मज्ञा यदि स्थ न मुमूर्षवः ।
नेदानीं शरनिर्भिन्नाः शोचध्वं निहता मया ॥ ०५० ॥

तथोक्तास्तेन वीरेण कदर्थीकृत्य तद्वचः ।
अभिपेतुर्जनं मूढा वार्यमाणाः पुनः पुनः ॥ ०५१ ॥

ततोऽर्जुनो धनुर्दिव्यं गाण्डीवमजरं महत् ।
आरोपयितुमारेभे यत्नादिव कथञ्चन ॥ ०५२ ॥

चकार सज्यं कृच्छ्रेण संभ्रमे तुमुले सति ।
चिन्तयामास चास्त्राणि न च सस्मार तान्यपि ॥ ०५३ ॥

वैकृत्यं तन्महद्दृष्ट्वा भुजवीर्ये तथा युधि ।
दिव्यानां च महास्त्राणां विनाशाद्व्रीडितोऽभवत् ॥ ०५४ ॥

वृष्णियोधाश्च ते सर्वे गजाश्वरथयायिनः ।
न शेकुरावर्तयितुं ह्रियमाणं च तं जनम् ॥ ०५५ ॥

कलत्रस्य बहुत्वात्तु संपतत्सु ततस्ततः ।
प्रयत्नमकरोत्पार्थो जनस्य परिरक्षणे ॥ ०५६ ॥

मिषतां सर्वयोधानां ततस्ताः प्रमदोत्तमाः ।
समन्ततोऽवकृष्यन्त कामाच्चान्याः प्रवव्रजुः ॥ ०५७ ॥

ततो गाण्डीवनिर्मुक्तैः शरैः पार्थो धनञ्जयः ।
जघान दस्यून्सोद्वेगो वृष्णिभृत्यैः सह प्रभुः ॥ ०५८ ॥

क्षणेन तस्य ते राजन्क्षयं जग्मुरजिह्मगाः ।
अक्षया हि पुरा भूत्वा क्षीणाः क्षतजभोजनाः ॥ ०५९ ॥

स शरक्षयमासाद्य दुःखशोकसमाहतः ।
धनुष्कोट्या तदा दस्यूनवधीत्पाकशासनिः ॥ ०६० ॥

प्रेक्षतस्त्वेव पार्थस्य वृष्ण्यन्धकवरस्त्रियः ।

जग्मुरादाय ते म्लेच्छाः समन्ताज्जनमेजय ॥ ०६१ ॥

धनञ्जयस्तु दैवं तन्मनसाचिन्तयत्प्रभुः ।
दुःखशोकसमाविष्टो निःश्वासपरमोऽभवत् ॥ ०६२ ॥

अस्त्राणां च प्रणाशेन बाहुवीर्यस्य सङ्क्षयात् ।
धनुषश्चाविधेयत्वाच्छराणां सङ्क्षयेण च ॥ ०६३ ॥

बभूव विमनाः पार्थो दैवमित्यनुचिन्तयन् ।
न्यवर्तत ततो राजन्नेदमस्तीति चाब्रवीत् ॥ ०६४ ॥

ततः स शेषमादाय कलत्रस्य महामतिः ।
हृतभूयिष्ठरत्नस्य कुरुक्षेत्रमवातरत् ॥ ०६५ ॥

एवं कलत्रमानीय वृष्णीनां हृतशेषितम् ।
न्यवेशयत कौरव्यस्तत्र तत्र धनञ्जयः ॥ ०६६ ॥

हार्दिक्यतनयं पार्थो नगरं मार्तिकावतम् ।
भोजराजकलत्रं च हृतशेषं नरोत्तमः ॥ ०६७ ॥

ततो वृद्धांश्च बालांश्च स्त्रियश्चादाय पाण्डवः ।
वीरैर्विहीनान्सर्वांस्ताञ्शक्रप्रस्थे न्यवेशयत् ॥ ०६८ ॥

यौयुधानिं सरस्वत्यां पुत्रं सात्यकिनः प्रियम् ।
न्यवेशयत धर्मात्मा वृद्धबालपुरस्कृतम् ॥ ०६९ ॥

इन्द्रप्रस्थे ददौ राज्यं वज्राय परवीरहा ।
वज्रेणाक्रूरदारास्तु वार्यमाणाः प्रवव्रजुः ॥ ०७० ॥

रुक्मिणी त्वथ गान्धारी शैब्या हैमवतीत्यपि ।
देवी जाम्बवती चैव विविशुर्जातवेदसम् ॥ ०७१ ॥

सत्यभामा तथैवान्या देव्यः कृष्णस्य संमताः ।
वनं प्रविविशू राजंस्तापस्ये कृतनिश्चयाः ॥ ०७२ ॥

द्वारकावासिनो ये तु पुरुषाः पार्थमन्वयुः ।
यथार्हं संविभज्यैनान्वज्रे पर्यददज्जयः ॥ ०७३ ॥

स तत्कृत्वा प्राप्तकालं बाष्पेणापिहितोऽर्जुनः ।
कृष्णद्वैपायनं राजन्ददर्शासीनमाश्रमे ॥ ०७४ ॥

---

# व्यासार्जुनसमागमः

## अध्याय ००९

वैशंपायन उवाच ॥

प्रविशन्नर्जुनो राजन्नाश्रमं सत्यवादिनः ।
ददर्शासीनमेकान्ते मुनिं सत्यवतीसुतम् ॥ ००१ ॥

स तमासाद्य धर्मज्ञमुपतस्थे महाव्रतम् ।
अर्जुनोऽस्मीति नामास्मै निवेद्याभ्यवदत्ततः ॥ ००२ ॥

स्वागतं तेऽस्त्विति प्राह मुनिः सत्यवतीसुतः ।
आस्यतामिति चोवाच प्रसन्नात्मा महामुनिः ॥ ००३ ॥

तमप्रतीतमनसं निःश्वसन्तं पुनः पुनः ।
निर्विण्णमनसं दृष्ट्वा पार्थं व्यासोऽब्रवीदिदम् ॥ ००४ ॥

अवीरजोऽभिघातस्ते ब्राह्मणो वा हतस्त्वया ।
युद्धे पराजितो वासि गतश्रीरिव लक्ष्यसे ॥ ००५ ॥

न त्वा प्रत्यभिजानामि किमिदं भरतर्षभ ।
श्रोतव्यं चेन्मया पार्थ क्षिप्रमाख्यातुमर्हसि ॥ ००६ ॥

अर्जुन उवाच ॥

यः स मेधवपुः श्रीमान्बृहत्पङ्कजलोचनः ।
स कृष्णः सह रामेण त्यक्त्वा देहं दिवं गतः ॥ ००७ ॥

मौसले वृष्णिवीराणां विनाशो ब्रह्मशापजः ।
बभूव वीरान्तकरः प्रभासे रोमहर्षणः ॥ ००८ ॥

ये ते शूरा महात्मानः सिंहदर्पा महाबलाः ।
भोजवृष्ण्यन्धका ब्रह्मन्नन्योन्यं तैर्हतं युधि ॥ ००९ ॥

गदापरिघशक्तीनां सहाः परिघबाहवः ।
त एरकाभिर्निहताः पश्य कालस्य पर्ययम् ॥ ०१० ॥

हतं पञ्चशतं तेषां सहस्रं बाहुशालिनाम् ।
निधनं समनुप्राप्तं समासाद्येतरेतरम् ॥ ०११ ॥

पुनः पुनर्न मृश्यामि विनाशममितौजसाम् ।
चिन्तयानो यदूनां च कृष्णस्य च यशस्विनः ॥ ०१२ ॥

शोषणं सागरस्येव पर्वतस्येव चालनम् ।
नभसः पतनं चैव शैत्यमग्नेस्तथैव च ॥ ०१३ ॥

अश्रद्धेयमहं मन्ये विनाशं शार्ङ्गधन्वनः ।

न चेह स्थातुमिच्छामि लोके कृष्णविनाकृतः ॥ ०१४ ॥

इतः कष्टतरं चान्यच्छृणु तद्वै तपोधन ।
मनो मे दीर्यते येन चिन्तयानस्य वै मुहुः ॥ ०१५ ॥

पश्यतो वृष्णिदाराश्च मम ब्रह्मन्सहस्रशः ।
आभीरैरनुसृत्याजौ हृताः पञ्चनदालयैः ॥ ०१६ ॥

धनुरादाय तत्राहं नाशकं तस्य पूरणे ।
यथा पुरा च मे वीर्यं भुजयोर्न तथाभवत् ॥ ०१७ ॥

अस्त्राणि मे प्रनष्टानि विविधानि महामुने ।
शराश्च क्षयमापन्नाः क्षणेनैव समन्ततः ॥ ०१८ ॥

पुरुषश्चाप्रमेयात्मा शङ्खचक्रगदाधरः ।
चतुर्भुजः पीतवासा श्यामः पद्मायतेक्षणः ॥ ०१९ ॥

यः स याति पुरस्तान्मे रथस्य सुमहाद्युतिः ।
प्रदहन्रिपुसैन्यानि न पश्याम्यहमद्य तम् ॥ ०२० ॥

येन पूर्वं प्रदग्धानि शत्रुसैन्यानि तेजसा ।
शरैर्गाण्डीवनिर्मुक्तैरहं पश्चाद्व्यनाशयम् ॥ ०२१ ॥

तमपश्यन्विषीदामि घूर्णामीव च सत्तम ।
परिनिर्विण्णचेताश्च शान्तिं नोपलभेऽपि च ॥ ०२२ ॥

विना जनार्दनं वीरं नाहं जीवितुमुत्सहे ।
श्रुत्वैव हि गतं विष्णुं ममापि मुमुहुर्दिशः ॥ ०२३ ॥

प्रनष्टज्ञातिवीर्यस्य शून्यस्य परिधावतः ।
उपदेष्टुं मम श्रेयो भवानर्हति सत्तम ॥ ०२४ ॥

व्यास उवाच ॥

ब्रह्मशापविनिर्दग्धा वृष्ण्यन्धकमहारथाः ।
विनष्टाः कुरुशार्दूल न ताञ्शोचितुमर्हसि ॥ ०२५ ॥

भवितव्यं तथा तद्धि दिष्टमेतन्महात्मनाम् ।
उपेक्षितं च कृष्णेन शक्तेनापि व्यपोहितुम् ॥ ०२६ ॥

त्रैलोक्यमपि कृष्णो हि कृत्स्नं स्थावरजङ्गमम् ।
प्रसहेदन्यथा कर्तुं किमु शापं मनीषिणाम् ॥ ०२७ ॥

रथस्य पुरतो याति यः स चक्रगदाधरः ।
तव स्नेहात्पुराणर्षिर्वासुदेवश्चतुर्भुजः ॥ ०२८ ॥

कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः ।
मोक्षयित्वा जगत्सर्वं गतः स्वस्थानमुत्तमम् ॥ ०२९ ॥

त्वया त्विह महत्कर्म देवानां पुरुषर्षभ ।
कृतं भीमसहायेन यमाभ्यां च महाभुज ॥ ०३० ॥

कृतकृत्यांश्च वो मन्ये संसिद्धान्कुरुपुङ्गव ।
गमनं प्राप्तकालं च तद्धि श्रेयो मतं मम ॥ ०३१ ॥

बलं बुद्धिश्च तेजश्च प्रतिपत्तिश्च भारत ।
भवन्ति भवकालेषु विपद्यन्ते विपर्यये ॥ ०३२ ॥

कालमूलमिदं सर्वं जगद्बीजं धनञ्जय ।
काल एव समादत्ते पुनरेव यदृच्छया ॥ ०३३ ॥

स एव बलवान्भूत्वा पुनर्भवति दुर्बलः ।

स एवेशश्च भूत्वेह परैराज्ञाप्यते पुनः ॥ ०३४ ॥

कृतकृत्यानि चास्त्राणि गतान्यद्य यथागतम् ।
पुनरेष्यन्ति ते हस्तं यदा कालो भविष्यति ॥ ०३५ ॥

कालो गन्तुं गतिं मुख्यां भवतामपि भारत ।
एतच्छ्रेयो हि वो मन्ये परमं भरतर्षभ ॥ ०३६ ॥

एतद्वचनमाज्ञाय व्यासस्यामिततेजसः ।
अनुज्ञातो ययौ पार्थो नगरं नागसाह्वयम् ॥ ०३७ ॥

प्रविश्य च पुरीं वीरः समासाद्य युधिष्ठिरम् ।
आचष्ट तद्यथावृत्तं वृष्ण्यन्धकजनं प्रति ॥ ०३८ ॥

---

Mahabharata
Encoding : ISCII

Converted for devanagari output using xetex-itrans with sdvn mapping on July 23, 2013